श्रीपार्वती—यथेच्छा परमेश्वरस्य.

श्रीपार्वतीपरमेश्वरी—[ ससन्तोषम् ]

राधे ! राधे ! जय जय सदा रासलीलेश्वरी त्वं
श्रीकृष्णेन्दो ! जय जय सदा रासलीलेश्वरस्त्वम् ॥
प्रेमाम्भोधी नयनसुखदौ सच्चिदानन्दमूर्ती
चेतःकुञ्जे कुरुतमिह नौ सर्वदा रासलीलाम् ॥ ६४ ॥

श्रीकृष्णचन्द्रः—क नन्दतनयो दयामृतमयाशयाऽहं प्रभो !
इयं च वृषभानुजा क्वदुधिदुग्धतकन्यका ॥
त्वया शिव ! दयादृशा शिवदया रयाद्विर्मितौ
समस्तसुखसागरौ सुरवरौ च मायेश्वरौ ॥ ६५ ॥

[ इत्युक्त्वा प्रणमति ]

श्रीशङ्करः—अलमलं रससागर ! राधिकाहृदयनागर ! कृष्ण ! कलानिधे ! ॥
रचनया वचसामनया जगत्त्रयविमोहिकयाऽपि कयाप्यहो ! ॥६६॥

न वरुणो न यमो न धनाधिपो न च विरञ्चिरहं न शचीश्वरः ॥
य इह मोहमयुस्तव मायया प्रबलयाऽबलया त्वदुपासके ॥६७॥

अयमहं तु हरे ! तव तत्त्वविन् त्वमपि तत्त्वविद्प्रसरोऽसि मे ॥
किमथवा बहुना त्वमहं त्वहं त्वमसि देव यद क
भिदाऽऽवयोः ? ॥ ६८ ॥

तत उपास्य उपासक एकतामुपगते प्रणयोक्तिरियं हि ते ॥
अबुधचित्तविमोहनहेतवे सुजनसङ्ग्रहसेतव एव वा ॥ ६९ ॥

श्रीकृष्णः—सत्यमेव यदाह भगवान्—

ऐक्यमेव न भेदः श्रीसदाशिव ! सदाऽऽवयोः ॥
आवयोरैक्यतत्त्वज्ञस्तत्त्वज्ञपदमाप्नुयात् ॥ ७० ॥

अत एव—

न मद्भक्तोऽपि मद्भक्तो यस्त्वभक्तस्त्वयीश्वरे ॥
न ते भक्तोऽपि ते भक्तो यस्त्वभक्तो मयि प्रभो ! ॥ ७१ ॥

अत एव ममेयं प्रतिज्ञा—

" परात्परतरं यान्ति नारायणपरायणाः ॥
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ "

नारदः—श्रीकृष्णचन्द्र ! यथार्थैवेयमुक्तिस्ते—

द्विषन्न प्राप्नुयाच्छ्रेयो नरोऽपि पामरं नरम् ॥
कथं श्रेयोऽश्नुते श्रेयस्करौ हरिहरौ द्विषन्? ॥

श्रीकृष्णः—वेद्म्यैक्यमेव जगदीश्वर ! वस्तुतो नौ
निःसंशयं मिथ इहाखिलविश्वबन्धो ! ॥
चेतस्तथापि मम शैलसुतासहाय
शम्भो ! त्वयि प्रणयवद् यद् किंकरोमि ॥ ७२ ॥

लीलाविग्रहधारणकारणमध्येऽपि कारणं परमम् ॥
त्वत्पादपद्ममज्जनव्यसनं मे नित्यमुक्तरास्य ॥ ७३ ॥

ततो यावल्लीलाविग्रहधारणं तु ममायमेवाभिलाषः
अनुजनुरनुमासहायसेवं भवतु कदाचिदहो महेश ! माऽहः ॥
क्षणलवघटिका अपि त्वदङ्घ्रिस्मृतिरहिता न भवन्तु मे
कदापि ॥ ७४ ॥

किञ्च—स्फुरतु हृदयपद्मे मामकीने नितान्तं
किमपि मह उदारं विश्ववन्द्याभिवन्द्यम् ॥
हिमगिरितनयार्द्धं नीलकण्ठं त्रिनेत्रं
सुरसरिदवतंसं बालचन्द्राच्छभालम् ॥ ७५ ॥

श्रीशङ्करः—अनुदिनमनुवेलं कृष्णचन्द्र ! त्वदीयं
वयमपि वपुरेतच्चिन्तयामः स्वचित्ते ॥
करधृतवरवंशीवादनानन्दमग्नं
सरसिजनयनं श्रीराधिकाङ्गोपगूढम् ॥ ७६ ॥

किञ्च—कालिन्दीपुलिने कदम्बकदलीकुञ्जेऽतिमञ्जौ स्थितं
वंशीवादनतत्परं च परितो गोगोपगोपीवृतं ॥
अन्योन्याननचन्द्रबद्धनयनद्वन्द्वे मनोहर्यदे
राधामाधवयोर्युगे प्रतिलवं संलीनचित्ता वयम् ॥ ७७ ॥

श्रीकृष्णः—त्वयि स्वभक्तभक्तत्वं शोभते भक्तवत्सले ॥
यः करोषि दयालुः स्वान् सदाशिव ! सदाशिवान् ॥ ७८ ॥

श्रीशङ्करः—स पूर्णपुरुषोत्तमस्त्वमसि कृष्णचन्द्र ! प्रभो !
परा प्रकृतिरीश्वरी तव च राधिकेयं स्वयम् ॥

इदं मम विजानतस्त्वदुपचारवाक्यैरले
वयं किमपि मन्महे युगलरूपमेकं महः ॥ ७९ ॥

श्रीकृष्णः—गच्छतस्तिष्ठतो वापि विशतः स्वपतोऽथवा ॥
रमतां मानसे मे श्रीपार्वतीपरमेश्वरौ ॥ ८० ॥

श्रीशङ्करः—कृष्णचन्द्र ! वयमप्यहर्निशं यावदेतदधिकारपालनम् ॥
इन्द्रनीलमणिनीलमेकतश्चञ्चलानिचयचञ्चदन्यतः ॥ ८१ ॥

श्रीकलिन्दगिरिनन्दिनीतटप्रान्तमञ्जुलनिकुञ्जगोचरम् ॥
उज्ज्वलं किमपि चित्तचौर्यकृचेतसा मुहुरुपास्महे महः ॥८२॥

[ युग्मम् ]

श्रीकृष्णः—इदं तद् भक्तवात्सल्यं भक्तानुग्रहभावनं ॥
त्वय्येव परमां काष्ठां विन्दतेऽन्यत्र दुर्लभम् ॥ ८३ ॥

श्रीशङ्करः—अलमलं पुनरुपचारवचनरचनयाऽनया—
जय जय जय राधे ! रासलीलेश्वरी त्वं
जय जय जय राधाधीश ! रासेश्वरस्त्वम् ॥
अनुभवतममन्दानन्दसन्दोहमीशौ
भवतु पुनरपीयं रासलीला मुदे नः ॥ ८४ ॥

[ इत्युक्त्वा पुष्पकमारुह्य निष्क्रान्तौ श्रीपार्वतीपरमेश्वरौ सह नारदेन. ]

श्रीकृष्णः—प्रिये ! दृष्टा श्रीमहेश्वरस्य महेश्वरता, ययाऽस्मादृशान् स्वीयान् भक्तानपि परमेश्वरनिर्विशेषधिया पश्यति—

जगत्पिता यो जगतो हिताय शिवाय शान्त्यै च चिरायुराप्त्यै ।
सदाशिवोपि स्वयमीदृशानि चित्रं चरित्राणि चरीकरीति ॥८५॥

श्रीराधा—प्राणनाथ! दृष्टं सर्वमनुभूतं च, कदा पुनस्तयोः परमेश्वरी-परमेश्वरयोर्दर्शनं भविष्यति? निर्दयं दुनोति चेतो मे तद्विरहवेदना.

श्रीकृष्णः—प्रिये! —

कुञ्जे कुञ्जे प्रतितरुतलं सर्वतः पर्वताग्रे
तीरे तीरे तरणिदुहितुश्चानुरङ्गत्तरङ्गम् ।
देशे देशे दिशि दिशि पुरः श्रीशिवासंयुतो मे ।
गङ्गाधारी स्फुरति जगदानन्दकारी पुरारिः ॥ ८६ ॥

नैतावद् वृषभानुजे! करुणया तस्याशुतोषस्य मे
सर्वं खल्विदमम्बिकेश्वरमयं चित्ते जगद् भासते ॥
शम्भुः प्रेयसि! कुत्र नास्ति च कदा नास्तीति नो वेद्म्यहं
दूरे तद्विरहव्यथापथकथा कस्माद् वृथा खिद्यसे ॥ ८७ ॥

श्रीराधा—अयि हृदयवल्लभ! सर्वतः परमशिवदर्शिनी दिव्या दृष्टिः कैः पुण्यैरुपलब्धा भगवता?

श्रीकृष्णः—षष्टिवर्षसहस्राणि तपः कृत्वा हिमाचले ।
शम्भोः करुणया लब्धा प्रिये! दृष्टिरियं मया ॥ ८८ ॥

श्रीराधा—भगवन्! तादृशी दृष्टिस्तु त्वत्कृपया कदा भविष्यतीति तु न जाने, साम्प्रतं तु—

दिनमणितनयायास्तीरकुञ्जेऽतिमञ्जौ
प्रियतम ! मम दृष्टौ राधिकामाधवेशं ॥
स्फटिकमणिमयं श्रीशैलजासंयुतं तं
वरशशधरमौलिं पश्यति श्रीमहेशम् ॥ ८९ ॥

श्रीकृष्णः—देवि ! यद्येवं तर्हि श्रीयमुनायां स्नात्वा श्रीराधामाधवेश्वराख्य-महेश्वरार्चनेन तद्विरहवेदनां विस्मरिष्यामस्तदेहि प्रिये ! इत इतः कदम्बवीथ्या गच्छावः—

[ इति वदन् गृहीतश्रीराधाकरकमलो निष्क्रान्तः श्रीकृष्णचन्द्रः ]



## ॥ चतुर्थोऽङ्कः ॥



[ ततः प्रविशति मृकण्डो विशालाक्षी च. ]

विशालाक्षी-नाथ! पुत्रो मे कृतोपनयनसंस्कारो गुरुसेवार्थं भगवत उपमन्योराश्रमं गतो, नाद्यापि तस्य काचित् प्रवृत्तिरुपलभ्यते तेन चिन्तामग्नं मनो मे न क्वापि शान्तिमुपयाति ।

मृकण्डः—प्रिये! श्रीमहेश्वर-महाप्रसादपात्रस्य महामुनेः श्रीमत उपमन्यो राश्रमे स्थितस्य तस्य का चिन्ता? यत्र—

सहजवैरधरा अपि जन्तवः सह रमन्त उपात्तदयोदयाः ॥
नहि यमोपि च यत्र गतं नरं प्रभुरवेक्षितुमुद्धतया दृशा ॥ १ ॥

किमिव तत्र तवात्मजजन्मभयं गुरुकृपेक्षणरक्षणधारिणः ॥
तदलमत्र तवात्मजचिन्तया मनसि चिन्तय चिन्तय शङ्करम् ॥२॥

विशालाक्षी-प्राणनाथ!

स्मारं स्मारं परमशिवयोः श्रीयुतं पादपद्मं
धारं धारं मनसि च तयोः सच्चरित्रावलीश्च ॥
गायं गायं परमसुखदं सद्यशः श्रोत्रपेयं
धैर्यं धर्तुं प्रयत इह, हा स्थैर्यमेति स नैतत् ॥ ३ ॥

पुनः पुनः सैव ममान्तरग्रा चिन्ता भवत्यात्मजजन्म हि तस्य ॥
सदा सदाराम्बुदायलब्धो कदा यदाऽऽयास्यति मे स बालः ? ॥४॥

[ नेपथ्ये ]

चिन्तां मा कुरु हे मृकण्डमहिले! कारुण्यरत्नाकर—
श्रीमत्साम्बसदाशिवातुलकृपालोकैकलब्धोदयम् ॥

प्राप्तं पश्य निजं सुतं गुरुयुतं विद्याब्धिपारंगमं
मार्कण्डेयमनन्यभक्तममलं श्रीचन्द्रचूडामणेः ॥ ५ ॥

विशालाक्षी—अहो ! केनेयं श्रवणयोर्मे पीयूषवृष्टिः कृता ? [ इति वदन्ती परितोवलोकयति ]

मृकण्डः—प्रिये ! प्रिये ! पाद्यं पाद्यमर्घ्यमर्घ्यमुपानय, एष भगवानुपमन्युरलङ्करोति आश्रमभूमिं नः, सुवर्णसूर्योदयोऽयं दिवसः [ इति वदन् अभिगम्य पाद्यार्घ्यादिना सम्पूज्यासने उपवेश्य ]

भगवन्नुपमन्यो !

धन्योऽयं दिवसो महासुखकरो धन्या च वेलाप्यसौ
धन्योऽहं च ममाऽङ्गनेयमधुना धन्याश्च वन्या अमी ॥
प्राप्ता नः पितरश्च तृप्तिमतुलां तुष्टानि दिष्टानि नः
सर्वाणीह मुनीन्द्र ! हे भगवति प्राप्तेऽस्मदीयाश्रमम् ॥ ६ ॥

उपमन्युः—अलमलमत्युपचारैर्मृकण्ड ! मुनिमण्डलैकमण्डन ! हे ॥
स्वीयेष्वप्युपचारः परकीयत्वं निवेदयति ॥ ७ ॥

मृकण्डः—भगवन् ! नेमा उपाचारगिरः किन्तु परमपरितोषपीयूषपूर्णहृदयोद्गारलहर्यः ।

उपमन्युः—[ मार्कण्डेयं प्रति ]—

वत्स ! तं मातरं मान्यां पितरं च दयामयम् ॥
प्रणम प्रेमपूर्णात्मा मार्कण्डेय ! महामते ॥ ८ ॥

मार्कण्डेयः—यथाज्ञा गुरुचरणानाम् [ इत्युक्त्वा उत्थाय ] :

दयामृतमये मातः ! पितः ! प्रणतवत्सल ! ॥
मार्कण्डेयोऽभिवन्देऽहं युवां परशिवाविव ॥ ९ ॥
[ इत्युक्त्वा साष्टाङ्गपातं प्रणमति ]

उभौ—वत्स ! साम्बसदाशम्भोः पदाराधनतः सदा ॥
सद्गुरोश्च दयादृष्ट्याऽमन्दमानन्दमाप्नुयाः ॥ १० ॥

उपमन्युः—अयि मृकण्ड ! मृकण्ड तवाधुना करुणयाऽभ्युदयोऽस्ति महेशितुः॥
नयमयस्तनयस्तव वर्तते सुनिगमागमविज्ञशिरोमणिः ॥ ११ ॥

मृकण्डः—सोऽयं प्रभावः सद्गुरूणां श्रीमतां करुणावलोकलहरीणाम्.

उपमन्युः—सर्वविद्याधिनाथश्रीमहेश्वरदयादृशा ॥
स्वयं श्रुतधरो जातो मन्ये ते तनयो मुने ! ॥ १२ ॥

बालस्याप्यस्य कवित्वं भगवतो व्यासस्येव प्रतिभाति ।

मृकण्डः—कवित्वं श्रुतधारित्वं निगमागमविज्ञता ॥
गुरो ! गुरोः कृपालोकलहरीभिर्न दुर्लभा ॥ १३ ॥

भाग्यवन्तं कृतार्थं च मन्ये तनयमद्य मे ॥
यं प्रशंसथ यूयं सद्गुरवः करुणार्णवाः ॥ १४ ॥

उपमन्युः—मार्कण्डेयेन ते मित्र ! पुत्रेणानेन सर्वदा ॥
श्रीमान् मृत्युञ्जयो देवः सेवनीयोऽनुवासरम् ॥ १५ ॥

मन्त्रश्च तस्य जप्तव्य आधिव्याधिविनाशकृत् ॥
इति मे भाति तत्प्रेम्णा शङ्काशतवृतात्मनः ॥ १६ ॥

मृकण्डः—भगवन्! सोऽयमत्रभवतो वात्सल्यवारिधेःशिष्यवात्सल्यमहिमा।
सद्गुरूणां स्वशिष्येषु यद् वात्सल्यं विजृम्भते ॥
तद् दृश्यते न हृदये पित्रोर्जनिदयोरपि ॥ १७ ॥

औरसपुत्रनिर्विशेषप्रेमप्रसरा धर्मपुत्रेषु स्वेषु धर्मपितरो भवादृशा गुरव इति जगत्प्रसिद्धमेव। तदिदानीमेव श्रीमृत्युञ्जय-मन्त्रोपदेशदानानुग्रहं कुर्वन्त्वत्रभवन्तोभवन्त इति प्रार्थना मे।

उपमन्युः—यद्येवमनुमतिस्ते तर्हि सज्ज एवाहं मन्त्रचिन्तामणिमेन-मुपदेष्टुम्।

[ मार्कण्डेयं प्रति ]

वत्स मार्कण्डेय! उत्तिष्ठेहि श्रीकावेरीतीरे श्रीचन्द्रशेखरमन्दिरे श्रीमहामृत्युञ्जयमन्त्रं त्वामुपदेक्ष्यामि।

मार्कण्डेयः—यथाज्ञा गुरुचरणानाम्। इत इतो गुरवः [ इति निष्क्रान्तौ गुरुशिष्यौ ]

मृकण्डः—प्रिये! अद्य चिरञ्जीवी ते पुत्र इत्यवेहि।

विशालाक्षी-[ सहर्षम् ] कथमिव?

मृकण्डः—आधिव्याधिशतापनोदनपटुः श्रीमान् स मृत्युञ्जयो
देवो मृत्युभयापहो विजयते मन्त्रश्च तस्याप्यहो ॥
सद्यो मृत्युहरः सदाऽमृतकरो मन्त्रप्रदः श्रीगुरु—
स्त्वत्सोऽप्रतिमेश्वरीकृतमहादेवो दयार्द्राशयः ॥ १८ ॥

नेयं सामग्रीसम्पद् विना सद्भाग्यं लभ्या। लब्धा च सा निवेदयति ते पुत्रस्य चिरजीवितताम्।

विशालाक्षी—नाथ! स्मृतिपथमुपयाति भगवतो नारदस्य—

'अष्टवर्षप्रमाणायुः सर्वज्ञः सद्गुणार्णवः ॥
सनयस्तनयस्ते स्तात् सदाशिवपदाश्रयः ॥'—

इति वचनं, तेन न मे धीर्धृतिं धत्ते।

मृकण्डः—भीरु! सत्यं तत् तथापि—

अल्पायुषोऽपि शतशः कल्पायुष इहाभवन् ॥
भवन्ति च भविष्यन्ति श्रीमन्मृत्युञ्जयाश्रयाः ॥ १९ ॥

तन्निश्चिन्ता भव।

विशालाक्षी—नाथ! त्वद्वचनेन निश्चिन्तैवास्मि तथापि—

क्व तपः क्व च तद्वपुश्च तद् वय आयुश्च तदीयमल्पकम् ॥
क्व महेशमहाप्रसन्नताऽमृतपात्रत्वमतीव दुर्लभम् ॥ २० ॥

तदावाभ्यामपि तद्रक्षणाय किमपि कर्त्तव्यमिति प्रार्थना मे।

मृकण्डः—यद्येवमेव ते निश्चयस्तर्हि—

त्र्यम्बकं वयमुपास्महेऽधुना पुष्टिवर्द्धनमघं सुगन्धिनम् ॥
यो निजाश्रितमनायुषं जनं मृत्युतोऽवति कृपावलोकनैः ॥ २१ ॥

तदेहि श्रीशिवपूजनशालायां गच्छावः।

विशालाक्षी—यथाज्ञा प्राणनाथस्य [इति वदन्ती पत्या सह निष्क्रान्ता]

[ततः प्रविशति कुलरतं मृकण्डस्य दासी गङ्गा गोदावरी चान्यतः]

गङ्गा—अजीगर्तो नृपायादात् पशुकृत्यै निजं सुतम् ॥
धनलोभात् ततो मन्ये ब्राह्मणा निर्दयाशयाः ॥ २२ ॥

येषां स्वापत्येष्वपि न दयोदयस्तेषां परेषु परापत्येषु कुत एव दयोदयः स्यात् ।

गोदावरी—गङ्गे ! गङ्गे ! किं प्रलपसि ? जागर्षि सुप्ता सती स्वप्नायसे वा ?

गङ्गा—एहि गोदावरि ! एहि, न सुप्तास्मि, जागर्म्येव न स्वप्नप्रलापोऽयं मे ।

गोदावरी—तर्हि यद्यपि मुनिमण्डलपरिचारकजने वक्तुमयोग्यमसम्भावितं च तथापि वदामि, केनापि कारणेन प्रमत्तोन्मत्ता वा जातासीति मन्येऽहम् ।

गङ्गा—कथमिव मामेवमधिक्षिपसि ?

गोदावरी—यतो दयामयाशयान् विश्वविश्वम्भरावलयगुरून् ब्राह्मणानपि निःशङ्कं निर्दयान् वदसि ततो मत्तामुन्मत्तां वा भवतीं मन्येऽहम् ।

गङ्गा—गोदावरि ! अमत्ताऽनुन्मत्ता च त्वमेव ब्राह्मणानां दयालुत्वं दर्शय ।

गोदावरी—के के ब्राह्मणवर्यवर्यवचसा संसारसिन्धोः परं
पारं नोपगता ? न नाकपतितां प्राप्ता न विष्णोः पदम् ? ॥
सम्प्राप्ता न शिवालयं न च परं वैरञ्चमाप्ताः पदं
किं तादृशि वचांसि निर्दयमुखान्निर्यान्ति गङ्गे ! क्वचित् ॥२३॥

किम्बहुना—

यत्रोदयश्च विजयश्च शुभा च कीर्ति—
र्निःसीमनिस्तुलनिधीश्वरदं च यत्र ॥

सौख्यानि यत्र च लसन्त्यचलानि तत्र
मन्ये दयादृगवलोकबलं हि तेषाम् ॥ २४ ॥

गङ्गे ! ब्रूहि पयोनिधिः करुणया पीतोऽस्ति केनाऽखिल
स्त्यक्त्वा मुक्तिपुरं परोपकृतये विन्ध्यश्च खर्वीकृतः ॥
केनेन्द्रस्य गृहेश्वरी च नहुषात् संरक्षिता केन वा
सर्पीकृत्य तमाशु कामकलुषं क्षत्रेण वैश्येन वा ॥ २५ ॥

तादृक्प्रभावान् करुणासमुद्रान् सद्ब्राह्मणान्निष्करुणान्वदन्ती ॥
न केवलं मे प्रतिभासि मत्तोन्मत्ता च सर्वस्य जनस्य चित्ते ॥२६॥

गङ्गा—गोदावरि ! तर्हि अजीगर्तेनापि स्वपुत्रः शुनःशेपः परमया दयया स्वर्गपद्‌प्रापणार्थं च स्वेच्छानुरूपं वित्तचयं गृहीत्वा राजकुमाराय रोहिताय पशुत्वेन वितीर्ण इति श्रद्धाजडया भवत्या मन्तव्यम् ।

गोदावरी—मूर्ख ! अविचारणीयानि पुरातनजनचरितानि; किञ्च नैकस्मिन् निष्करुणे जने सर्वमपि ब्राह्मणकुलं निष्करुणं वक्तुं शक्यम् ।

गङ्गा—[ सरोषम् ] अयि मूर्खतमे ! इदानीमिदानीन्तनस्य नः कुलपतेर्निर्दयतमचरितं ते कथयिष्यामि येन त्वं शीतलतरा निरुत्तरा च भविष्यसि ।

गोदावरी—श्रोतुमवहिताऽस्मि, परं धन्या ते सूक्ष्मदर्शिनी बुद्धिर्या बाल्याद्यावधि परमपरिचयवत्यपि भगवन्तं कुलपतिमपि निर्दयं मनुते ।

गङ्गा—मद्वचनश्रवणोत्तरं तवापि बुद्धिस्तादृशनिश्चयवती भविष्यति ।

गोदावरी—गङ्गे ! नाहं गङ्गा न च मे गुरुर्ग्रामान्तरं गतः परमविलम्बेन ते वक्तव्यं वद—

गङ्गा—जानात्येव भवती भगवता कुलपतिना तद्धर्मपत्न्या च वर्षत्रयपर्यन्तं दुष्कराणि तपांसि तप्त्वा परितुष्टात्परमेश्वराच्छ्रीमहेश्वरादेकं सत्पुत्ररत्नमुपलब्धम् ।

गोदावरी—अत्रकः सन्देहः ?

गङ्गा—जन्मतोऽष्टमवर्ष एव कृतोपनयनो दिग्देशकालानभिज्ञः क्षीरकण्ठः स एकाकी श्रीगुरुकुलसेवार्थं दूराद्दूरतरं देशं प्रेषितः । कोऽन्यः सदयः सहृदयस्तादृगवस्थं तादृशश्रमलब्धं च पुत्ररत्नं तृणमिव परित्यजेद् विनाऽस्मत्कुलपतेरकरुणतरहृदयात् ।

गोदावरी—मूर्खे ! सोऽयं तेषां कुलधर्मः । प्राणव्ययेऽपि तादृशधर्मधुरन्धराः स्वधर्ममतिक्रामन्ति किम् ?

गङ्गा—शृणु शृणु; मा नाम स्वधर्मोल्लङ्घनं करोतु कुलपतिः परं वर्षसप्तकावधि गुरुकुलसेवां निर्माय निर्माय निर्मायतमाशयो विदितवेदितव्योऽधीताध्येतव्यश्च गुरुणासह समागतः स्वसदनं बालको यदा तदैव तद्गुरुभिः सह किमपि रहसि विचार्य तैरेव सह कावेरीतीरं प्रेषितः, प्रोषितस्य च तस्य व्यतीता मासद्वादशी तथापि न कुलपतेश्चिन्ता भवति न वा तत्पत्न्याश्चित्ते पुत्रचिन्ता भवति । किमतः परं ब्राह्मणानां निर्दयतमत्वनिदर्शनं दर्शनीयं तत् त्वमेव वद ।

गोदावरी—गङ्गे! तव बुद्धितो भगवतः कुलपतेर्बुद्धिः परार्द्धपरम्परागुणाधिका वरीवरीतीति न संशयस्ततो यद्यत्कुलपतिः कुरुते तत् तस्य बालकस्य हिततममेवेति मन्तव्यम्। मा व्यर्थं खेदं कुरु मा च प्रलापपरम्परोच्चारणपरायणा भूयाः। यदि कदाचित् तादृशानि ते वचांसि भगवतः कुलपतेर्मातुर्वा विशालाक्ष्याः श्रवणयोर्गच्छेयुश्चेत्तयोर्मनसि कीदृशं दुःखं भवेदिति चिन्तनीयम्। तत् तूष्णीम्भूय शिवपूजनयोग्यानि पुष्पाणि गृहीतुं मया सह समेहि प्रदेशान्तरम्। अत्राऽधुनैव धर्मपत्न्या सह कुलपतिरागमिष्यति।

गङ्गा—अज्ञातप्रलपितं मे क्षन्तव्यम् [ इति वदन्ती गोदावर्या सह निष्क्रान्ता. ]

[ ततः प्रविशति सती विशालाक्षी मृकण्डश्च ]

विशालाक्षी—प्राणनाथ! अद्य मया किमपि दुःस्वप्नदुःखमनुभूतम्।

मृकण्डः—किं तत्?

विशालाक्षी-श्रीचन्द्रशेखरमन्दिरे श्रीचन्द्रशेखरं सम्पूज्य ध्यानलीनमावयोर्वत्सं मार्कण्डेयं प्रहर्तुं नानायुधधरा यमकिङ्करा इव बहवो 'हन्यतां हन्यतामेष मार्कण्डेय' इति वदन्तः प्रवृत्ताः।

मृकण्डः—प्रिये! स्वसङ्कल्पप्रभवाणि स्वप्नजातानीति जानती किं मुधा मुह्यसि, धैर्यमेव धार्यमार्यकुलकामिनीभिर्विपद्वेलायाम्।

विशालाक्षी—जानामि सर्वं जानामि तथापि न धैर्यं स्थैर्यं भजति सत्पुत्ररत्नप्रणाशशङ्काकुलायां मे हृदयभूमिकायाम् ।

मृकण्डः—श्रीचन्द्रशेखरमहेशसमीपगं ते तं देवदेवमनुवासरमर्चयन्तम् ॥
पुत्रं प्रहर्तुमिह को भुवनत्रयेऽपि स्याच्छक्तिमानिति विचिन्त्य विमुञ्च चिन्ताम् ॥ २७ ॥

विशालाक्षी—प्राणनाथ! यद्यपि सत्य एव श्रीमतां निश्चयस्तथापि दुःस्वप्नदुःखदग्धाया मे न पुत्रमुखदर्शनं विना मनः शान्तिं भजिष्यति, न हृदयकम्पोऽपसरिष्यति, तत् कृपां कृत्वा कृपाम्बुधयोऽत्रभवन्तो भवन्तो मत्पुत्रसन्निधिमेव मां नयतेत्यभ्यर्थना मे।

मृकण्डः—[ स्वगतम् ] अतिभूमिकामधिरूढोऽस्याः स्वकीयपुत्रस्याकुशलताचिन्ताभरः, युज्यते चैतत् प्रायोऽकुशलशतशङ्काकुलान्येव सुहृदां चेतांसीति ।

[ प्रकाशम् ] प्रिये! यद्येवमेव ते निश्चयस्तर्हि गच्छाम इदानीमेव चन्द्रशेखरसमीपम् ।

विशालाक्षी—महाननुग्रहः कृतः ! इत इतो भगवान् [ इति वदन्ती पत्या सह निष्क्रान्ता ]

[ ततः प्रविशन्त्याधयो व्याधयश्च ]

मनस्तापः—प्रियसुहृदो मे क्षणं विश्रम्यतां दूर इदानीं तन्मन्दिरं प्रतिनिवृत्ताश्च ते शिवगणाः ।

ज्वरः—[ परिवृत्यावलोक्य च ] सत्यं सखे ! सत्यं, नात्र कश्चिच्छिवगणो दृश्यते; न च चन्द्रशेखरमन्दिरध्वजोऽपि दृष्टिपथमवतरति। तत् क्षणं विश्रम्य यथाभिलषितं देशं गमिष्यामः।

हृत्कम्पः—[ सभयम् ] नहि नहि भ्रातरो मे नात्र क्षणमपि स्थेयम्। क्रुद्धाः शिवगणा इदानीमेवात्रागमिष्यन्ति, ताडयिष्यन्ति च पुनः सर्वानस्मान्। तद्दूराद्दूरं गत्वा विश्रम्यतामिति मतं मे।

अतिसारः—युक्तमाह हृत्कम्पो ममापि मतिस्तन्मतिमनुसरति।

क्रोधः—भीरुभीरुतरोऽयं हृत्कम्पस्तृणेऽपि चलति शिवगणागमनमेव शङ्कते। ह्यः सायंसमयात् पलायमानानामस्माकं निमेषमात्रमपि न काऽपि विश्रामो जातस्तदत्रैव विश्रम्य गमिष्यामः।

कामः—कामं, तथैव कर्तव्यम्।

सङ्ग्रहिणी—सत्यमाह कामस्तथैव कर्त्तव्यम्।

सर्वे—यद्येवं तर्हि अमुमेवोदुम्बरवृक्षमाश्रित्य तरङ्गिणीतरङ्गपरम्परापरिशीलनशीतलतरसमीरस्पर्शसुखमनुभवामः। [ इत्युक्त्वा उपविशन्ति ]

भयम्—सकललोकभयङ्करस्य भयस्याप्यन्यतो भयमिति मया प्रथममेवानुभूतम्। भ्रातरो मे! अस्माभिः सर्वैः प्रथमं दूरतो निपुणं निरीक्षितं यदा तदा तु केवलं श्रीशिवलिङ्गसमीपे ध्यानमीलितलोचनो मुनिबाल एव विलोकितो न तु कश्चिन्मुनिर्मनुजो वा विलोकितो नापि कश्चिच्छिवगणोऽपि दृष्टिपथमवातरत्।

पाण्डुः—अथ किं निर्मक्षिकमवलोक्यैव प्रभुनिदेशानुसारेण मुनिबालकं प्रहर्तुं प्रवृत्ताः ?

राजयक्ष्मा—मित्राणि मे ! उद्यतेष्वेव शस्त्रेष्वस्त्रेषु च न जानीमहे किमाकाशादवतीर्णाः किं पातालादुद्गताः किमु दशभ्यो दिग्भ्य आपतिताः किंवा तेजोमयात् तस्माच् शिवलिङ्गादेव निःसृताः शतशः सहस्रश शिवगणा नानायुधपाणयः प्रत्युत पीडयन्तिस्मास्मान् । येषां प्रहारैर्वयमिदानीमीदृशींदशामनुभवामः।

ज्वरः—भ्रातरौ मे ! विदितपूर्वमेवास्माकं यत् कृपापीयूषपूर्णहृदयः श्रीमदपर्णाहृदयदयितः क्षणलवनिमेषोन्मेषार्द्धमात्रेण कोटिब्रह्माण्डनिर्माणनिपुणां मनोवचोऽगोचरां शक्तिं बिभर्ति तस्य स्वभक्तरक्षणाय स्वकीयगणाविष्करणं किमिवाऽऽश्चर्यकरम् ?

राजयक्ष्मा—सखे ज्वर ! युक्तमुक्तं भवता परन्तु सर्वज्ञस्य सर्वशक्तिमतः श्रीसाम्बसदाशिवस्येदृशी भक्तवत्सलतैव मामाश्चर्यमग्नं करोति।

ज्वरः—अत्र कः सन्देहः ? परशिवस्य भक्तवत्सलता परमशिवस्यैव । धन्या धन्या सापि माता पवित्रा धन्यो धन्यः सोपि तातोऽतिपुण्यः ॥

जागर्त्यैवाहर्निशं रक्षितुं श्रीशम्भुः साक्षात् पुत्ररत्नं यदीयम् ॥२८॥

[ नेपथ्ये ]

कल्याणानि करोतु नः स करुणापीयूषपूर्णार्णवः
श्रीगौरीरमणः शरण्यशरणं श्रीराजराजेश्वरः ॥

यस्यैपत्करुणावलोकलहरीलीलाभिरांभिः सदा
नित्यानन्दनिधौ निमग्नमखिलं हृष्टं च पुष्टं जगत् ॥ २९ ॥

अपिच—

तप्त्वा तपांसि विविधानि परेशभक्त्या
या श्रीपरेश्वरमपि स्वपतिं चकार ॥
लेभे निजेप्सितमहेशगृहेश्वरीत्वं
श्रेयःश्रियै भवतु सा परमेश्वरी नः ॥ ३० ॥

हृत्कम्पः—[ सभयमुत्थाय ]. अयि भ्रातरः! उत्तिष्ठतोत्तिष्ठत, त्वरितं पलायनं कुरुत कुरुत, समागतः कश्चिदत्रापि महामाहेश्वरो मारयिष्यति नः ।

[ सर्वे साशङ्कं परितोऽवलोकयन्ति ]

[ ततः प्रविशति सती विशालाक्षी मुनिर्मृकण्डश्च ]

उभौ—शम्भो! शङ्कर! चन्द्रशेखर! कृपापीयूषपाथोनिधे!
श्रीशैलेन्द्रसुतायुताङ्ग! भगवन्! श्रीराजराज! प्रभो! ॥
दृष्ट्या शीतलया दयार्द्रतरया पीयूषवृष्ट्येव ते
सर्वं विश्वमिदं परेश! परमानन्दाब्धिमग्नं कुरु ॥ ३१ ॥

राजयक्ष्मा—सखे हृत्कम्प! मा भैषीः, पवित्रदर्शनाविमौ महामाहेश्वरौ कौचिन्मुनिदम्पती शीतलयतः स्नेहसुधाशिशिरया दृशाऽस्मान् सर्वांस्ततो मान्यौ मातापितराविव विश्वासार्हौ मे प्रतिभातस्तदुत्तिष्ठत सर्वेऽपि वयं तौ प्रणमामः ।

सर्वे—यथाज्ञा महाराजस्य [इत्युक्त्वा आधयो व्याधयश्च प्रणमन्ति]

दम्पती—अयि वत्साः! सदा शम्भोः प्रसादात् परमेशितुः ॥
भूयो भूयोऽपि भूयाद्वः कल्याणानां परम्परा ॥ ३२ ॥

ज्वरकम्पः—[सकम्पम्] महाराज! यद्यपि नैतौ दम्पती अस्माकं शङ्कार्हौ तथापि महामाहेश्वरसमीपावस्थानमेवास्माकमश्रेयस्करं यतः सकृपावलोकं दृष्टा अपि ताभ्यां वयं स्वयं ग्लायामहे तदितोऽपसर्पणमेव श्रेयस्करं नः, परं महाराजः प्रमाणाम्।

मृकण्डः—मा भयं भजत पुत्रका अयं नो भयङ्कर इहाऽस्त्यहो जनः ॥
चित्तवाकृतिभिरस्म्यहं यतः सर्वभूतकरुणार्पिताभयः ॥ ३३ ॥

सर्वेपि साधयो व्याधयः सहैव } [सप्रणामम्] भगवन्नेवमेव, कुतश्चन्द्रमसोऽग्न्युष्मसम्भवः।

विशालाक्षी—प्राणनाथ! त्वत्प्रदृष्टा यथामी सर्वेपि प्रतिभान्ति, भवदाज्ञा चेत्किमपि पृच्छामि।

मृकण्डः—प्रिये! शान्तस्वान्ततया प्रश्ने कृते न किमपि दूषणं पश्यामि, सुखं पृच्छ।

विशालाक्षी—यथाज्ञा देवस्य, [इत्युक्त्वा सर्वानाध्यादीन् प्रति]

के यूयं? कुत आगताः? कथमहो म्लानानना भ्रातरः?
किं दुःखं? भवतामुपस्थितमिदं? येनातिभीताशयाः? ॥
व्यग्रा लक्ष्यथ वक्रदेहलतिका हा छिन्नभिन्नाङ्गकाः
कर्ता यः कुशलं महेश्वर इह स्वस्थाः क्षणं तिष्ठत ॥ ३४ ॥

सर्वव्याध्यादयः-[ सहैव ]

> आधिव्याधिगणा वयं यममहाराजस्य चाज्ञाकरा—
> यामस्तस्य निदेशतो व्यथयितुं हन्तुं च लोके जनान् ॥
> अद्य प्रातरुपागता वनमिदं श्रीचन्द्रचूडामणे—
> र्मार्कण्डेयमुनीश्वरं व्यथयितुं हन्तुं च तस्याज्ञया ॥ ३५ ॥

विशालाक्षी—[ स्वगतम् ] हा !! एष स्वप्नवृत्तान्तः किमतः परं श्रोष्यामि । अथवा प्राणनाथाज्ञानुसारेण धैर्यं विधाय श्रोतव्यमेव सर्वम् । [ प्रकाशम् ] पुत्रकाः ! प्रभुनिदेशविवशानां युष्माकं कोऽपराधः? ततस्ततः ?

व्याध्यादयः—मातः ?—

> 'शिवनिर्माल्यतोयेन योऽङ्गानि परिमार्जति ॥
> आधयस्तस्य नश्यन्ति व्याधीनां तु कथैव का ? ॥'

इत्येवं जानन्तोपि वयं प्रभुनिदेशविवशाः प्रवृत्तास्तदाज्ञानुरूपं कर्तुम् ।

विशालाक्षी—[ स्वगतम् ] हा !! प्रबलतरैरीदृशैराधिव्याधिसहस्रैः परिपीडितस्य कुतो मे पुत्रकस्य कुशलम् । [ इत्यश्रूणि मुञ्चन्ती क्षणमधोमुखी तिष्ठति ]

मृकण्डः—पुत्रकाः ! ततः किं वृत्तम् ?

व्याध्यादयः—किमन्यद् भवेत् ?—

> हृदयवचनकर्मभिः परेषां हितमनुसन्दधतां महात्मनां ये ॥
> अहितमभिलषन्ति हन्त तेषामहितमुपस्थितमेव सर्वतोऽपि ॥३६॥

मृकण्डः—स्फुटं कथयत ।

व्याघ्रादयः—यथामुनिवराङ्ग कथयामः, शृणुत तातपादाः ।

> यालं मुनिं परशिवैकनिलीनचित्तं
> श्रीचन्द्रशेखरसमीपसमाधिनिष्ठम् ॥
> यावद्वयं व्यथयितुं निकटं प्रयाता—
> स्तावन्महेश्वरगणाः सहसाऽऽविरासन् ॥ ३७ ॥

मृकण्डः—आश्चर्यमाश्चर्यम् । ततस्ततः ?

व्याघ्रादयः—ततस्त्रिशूलैर्मुसलैर्गदाभिर्विच्छिन्नभिन्नावयवा वयं तैः ॥
विमुच्य तं यालमुनिं मुनीन्द्रो ! पलायिता हा हरिणप्लुतेन ॥३८॥

नाद्यापि कम्पो मनसो निवृत्तस्तावश्च नो यालमुनिप्रभाजः ॥
किंकर्तव्यतामूढमतिप्रसारा स्तिष्ठाम एते वयमत्र दुःखात् ॥३९॥

यमाज्ञया द्वावपि कालमृत्यू इहागतौ यालमुनिं निहन्तुम् ॥
तत्तेजसा दग्धसमस्तदेहौ क्व तौ प्रयातावितिनैव विद्मः ॥४०॥

मृकण्डः—वत्साः ! यूयं प्रयात पुनः प्रभुसमीपं वय, किमर्थं व्यर्थं शून्यारण्ये तिष्ठथ ।

व्याघ्रादयः—मुनीश्वर ! मुनिबालकेऽस्मिन् कुण्ठितशस्त्रास्त्रशक्तिप्रसरा न वयमधुना प्रभोः समीपमुपगन्तुं तस्मै च मलिनान्यस्मन्मुखानि दर्शयितुं प्रभवामस्ततोऽत्रैव स्थिताः स्मः ।

विशालाक्षी—[ सकरुणम् ] वत्साः ? तर्हि यावत्प्रभुप्रसादं युष्माकं क्व निवासो भविष्यतीति वेपते मे हृदयम् ।

व्याध्यादयः—[ स्वगतम् ] अस्या मातुर्निष्कारणा करुणा, या सकललोकदुःखदानामप्यस्माकं दुःखेन दुःखिता भवति । [ प्रकाशम् ] मातर्मा चिन्तां कुरु, संयमिनीमन्तराऽपि सन्ति नोऽनेकानि स्थानानि । शृणु—

परधनपरदाररतनराणां परिचितपापपरम्परापराणाम् ॥
अनयमयहृदां नृवानराणां दिशि दिशि सन्ति मनांसि नः स्थलानि ॥ ४१ ॥

अपिच—

अहरिहरपदाब्जसंश्रयाणामगुरुपदाम्बुरुहद्वयाश्रयाणाम् ॥
हरिहरगुरुनिन्दिनां मनांसि कति कति सन्ति न सन्ति नः स्थलानि ॥ ४२ ॥

अपकृतिशतसम्मुखाशयानां सुकृतपराङ्मुखचेतसां नितान्तम् ॥
हृदयवचनकर्मसु प्रभिन्नक्रमविदुषां च मनांसि नः स्थलानि ॥४३॥
अन्यान्यपि सन्ति सहस्रशो निवासस्थलानि तत्र मात्रा नश्चिन्ता विधेया ।

विशालाक्षी-वत्साः ! इदानीं सन्तुष्टं मे स्वान्तम् । तद् गच्छामि ।

राजयक्ष्मा—अयि मातापितरौ ! युवाभ्यामस्माकं तु सर्वं वृत्तं श्रुतं परन्तु—
अव्याजकरुणापूर्णौ कौ युवामिति नो मनः ॥
ज्ञातुमुत्कण्ठते तस्मात् कृपां कृत्वा कृपाम्बुधी ॥ ४४ ॥

निवेद्य स्वीयवृत्तान्तं कृतार्थान् कुरुतं युवाम् ॥
अस्मान् सर्वानिति प्रेम्णा प्रार्थयामि पुनः पुनः ॥४५॥ [युग्मम्]

मृकण्डः—वत्साः! आवयोर्वृत्तान्तश्रवणेन किं वः फलं, तथापि यद्या प्रहस्तर्हि कथयामि—

यं निहन्तुमिह यूयमागतास्तस्य बालकमुनेर्गतायुषः ॥
मातरं च पितरं च विद्धि नौ द्रष्टुमेव समुपागतौ च तम् ॥४६॥

राजयक्ष्मा—अहो!! निखिलमुनिमण्डलाखण्डलो भगवान्मृकण्डमुनिरेवात्र-भवान्? सकललोकवन्द्या चेयं सती विशालाक्षी? युवयोर्दर्शनेन कृतार्था वयं सर्वेऽपि। परं तातपादैः स्ववृत्तान्त-निवेदने 'तस्य बालकमुनेर्गतायुष' इत्युक्तं तत्र 'तस्य बालकमुनेश्चिरायुषः' इति वक्तव्यं, न मनसाप्येतदमङ्गलं चिन्तनीयम्।

विशालाक्षी-वत्स! नास्त्येव समवर्ती साक्षात्संयमिनीश्वरोऽपि यं निहन्तुं प्रयत्नपरम्पराः कुरुते तस्य कुतः क्षणलवमात्रमपि जीवेताशा? चिरायुष्प्रत्याशा तु दूरतोऽपास्तैव।

[इति वदन्ती नयनाभ्यामश्रुधारासारान् मुञ्चति]

राजयक्ष्मा—[स्वगतम्] अहो!! मातृणां पुत्रवात्सल्यम्। को हि पुत्रो विरञ्चिसमचिरंजीव्यपि मातापित्रोरीदृशस्याप्रतिमतमस्य वात्सल्यस्यानृण्यमधिगन्तुं जन्मशतैरपि प्रभुः स्यात्?। [इति वदन् सदयमुत्थाय तदीयामश्रुधारां स्वचेलाञ्चलेन मार्जयन्, प्रकाशम्] मातर्मातः! शान्तं पापं शान्तं पापं

प्रतिहतममङ्गलं च। मा ते पुत्रस्य चिरंजीवितायां शङ्कालेशमपि विधेहि । शृणु—

अमृतकरकलाधरं त्रिलोकी-सकलविपत्तिहरं हरं स्मरन्तम् ॥
अनुदिनमनुवेलमर्चयन्तं कथमिव तं स यमः क्षमः प्रहर्तुम् ॥४८॥

अमृतकलशयुग्मयुद्वहन्तं स्वकरयुगेन तथा कराम्बुजाभ्याम् ॥
निजशिरसि कृतामृताभिषेकं परमशिवं शरणं गतो महेशम् ॥४८॥

अयमिह जननि! प्रणतप्रपालः कथमिव तं दयया स कालकालः॥
सपदि नहि करालकालपाशादहह विमोचयिता दया-
मयात्मा? ॥ ४९ ॥ [ युग्मम् ]

मृकण्डः—[स्वगतम्] अहो राजयक्ष्मणः सोपपत्तिकः समाश्वासनप्रकारः। [प्रकाशम्] विशालाक्षि! अलं विषादेन, युक्तमेव वक्ति सकलरोगगणमहाराजोऽयम् ।

राजयक्ष्मा—किञ्च—

मृत्युञ्जयं मनुमनुक्षणमाजपन्तम् ॥
मृत्युञ्जयः स भगवान् कथमेव मृत्युम् ॥
जित्वा क्षणेन सबलं निजपादपद्मे
लीनं न तं समविता स्वमनन्यमकम्? ॥ ५० ॥

ततश्चिन्तां परित्यज्य याहि मातर्महेश्वरम् ॥
श्रीचन्द्रशेखरं द्रष्टुं तत्र द्रक्ष्यसि ते सुतम् ॥ ५१ ॥

आधिव्याधिविनिर्मुक्तं कृपया परमेशितुः ॥
सुवर्णवर्णं तपसा तोषयन्तमुमापतिम् ॥५२॥ [इत्युक्त्वा प्रणमति]

विशालाक्षी—वत्स! सत्यानि सन्तु ते वचांसि [इत्युक्त्वा पत्या सह निष्क्रान्ता]

राजयक्ष्मा—भो भो आधयो व्याधयश्च! वन्दनीयैरपि वन्दनीयौ गतौ मुनिदम्पती इदानीं वयमपि यथाभिमतस्थलेषु निलीय तिष्ठामो येन न महेश्वरभक्तजनदृग्गोचरतां गमिष्यामः।

सर्वेव्याध्यादयः—यथाज्ञा महाराजस्य [इत्युक्त्वा निष्क्रान्ताः]



## । पञ्चमोऽङ्कः ।



( ततः प्रविशति चित्रगुप्तेन सहितो धर्मराजः )

धर्मराजः—मित्र चित्रगुप्त ! नरकान्मुक्तानां पापानामवशिष्टपापफलानुभवाय का व्यवस्था विधीयते ?

चित्रगुप्तः—[ साञ्जलिबन्धमुत्थाय ] भगवन् ! युष्मदाज्ञानुसारेणाष्टविधा ज्वराः सोपद्रवा मातृपितृगुरुजनमनः सन्तापकराणां शरीरेषु निरन्तरं निवासायाऽऽज्ञप्ताः ।

धर्मः—[ सपरितोषम् ] सुकृतमेतत् कृतं, ततस्ततः ?

चित्रगुप्तः—सकलामयराजो यक्ष्मा च ब्रह्महत्याकारिणां शरीरे निवासं कुरुते

धर्मः—सम्यक् कृतम् । पाण्ढ्यं क्व प्रेषितम् ?

चित्रगुप्तः—देव ! परदारापहारिणां शरीरे बाल्यादेव वस्तुं पाण्ढ्यमाज्ञप्तम् ।

धर्मः—साधु प्रधान ! साधु कृतम् । जन्मान्धता पुनः क्व प्रेषिता ?

चित्रगुप्तः—महाराज ! यथायुष्मदाज्ञं पराङ्गनाङ्गावलोकनलुब्धचक्षुषां चक्षुष्षु स्थातुं प्रेषिता ।

धर्मः—अथाऽपस्मारस्य क्व स्थानं दत्तम् ?

चित्रगुप्तः—निरपराधानां प्राणिनामुद्बन्धनेन प्राणापहारिणां शरीरेषु यावज्जीवमपस्मारः स्थाता ।

धर्मः—मित्र चित्रगुप्त ! सुष्ठु कृतं तत्, जन्मबाधिर्यं क्व स्थापितम् ?

चित्रगुप्तः—प्रियहितकराण्यपि मातापितृगुरुजनवचनामृतानि कर्णेऽकुर्वतां कर्णेष्वेव स्थापितम् ।

धर्मः—अथ गद्गदवाक्त्वं क्व वसति ?

चित्रगुप्तः—मातापितृगुरुजनानपि हुङ्कुर्वतां तुङ्कुर्वतां पार्श्वेव वसति ।

धर्मः—सुरापानां शरीरेषु स्थातुं को रोग आज्ञप्तः ?

चित्रगुप्तः—सततहृदयदाहो विस्मृतिर्विभ्रमश्च
स्थितिमनुदिनमेते मद्यपानां शरीरे ॥
रवितनय ! नयाब्धे ! ते हि कर्त्तार एव
क्व नु कुशलमपीयन्मद्यपानां जनानाम् ॥ १

धर्मः—[सहर्षम्] युक्तमुक्तमिदं मित्रेण, ततस्ततः ?

चित्रगुप्तः—नाथ ! किम्बहुना–अतिसारा गृहिण्यो विषूचिका अर्शांसि कुष्ठा श्वासरक्तकपित्तोदरभगन्दर-प्रमुखाः प्रायः सर्वेऽपि रोगा यथायुष्मदाज्ञं तत्तत्पापकारिणामेव कायेषु यावदायुः स्थातुमाज्ञप्तास्तेनावशिष्टापापानामपि पापानां पापफलानुभवाय समीचीनैव व्यवस्था व्यवास्थापि देवेनेति मन्येऽहम् ।

धर्मः—मित्र ! अस्खलितप्रसारं संसारे शासनं नः ।

चित्रगुप्तः—अत्र कः सन्देहः ?

कालमृत्यू च रोगाश्च यस्याऽऽज्ञानुचराः प्रभो ! ॥
तस्य ते शासनं कुत्र रविपुत्र ! मृषा भवेत् ? ॥ २ ॥

[ नेपथ्ये ]

अकालमृत्यू भगवन् ! कालमृत्यू तथाऽधुना ॥
साधयो व्याधयो नष्टा मृत्युञ्जयमहाबलात् ॥ ३ ॥

धर्मः—[ साश्चर्यं स्वगतम् ] कथं कालो मृत्युश्चोद्विग्नौ लक्ष्येते ?
[ प्रकाशम् ] अयि कालमृत्यू ! कथमेवं गिरं वदथ ? किं वां दुःखम् ?

कालमृत्यू—भगवन्! मृकण्डपुत्रं नेतुं गताभ्यामावाभ्यां बहु दुःखमनुभूतम्। प्रज्वलज्ज्वलनज्वालामालाकुलमिव तस्य शरीरं द्रष्टुमपि न शक्तौ स्पर्शस्य तु वार्तैव दूरे ।

धर्मः—वत्सौ ! केन कारणेन तस्य तादृशं दुःसहं तेजो वर्द्धते ?

उभौ—नाथ ! श्रीमहामृत्युञ्जयदेवपूजनेन तद्ध्यानेन तन्मन्त्रजपेन च तस्य तादृशं तेजो वर्द्धते ।

धर्मः—साधिभिर्व्याधिभिर्भूतप्रेतपिशाचैश्च तं सम्पीडय श्रीमहामृत्युञ्जयभक्तिविमुखं कृत्वा च तं गृह्णीतम् ।

उभौ—साधयो व्याधयो भूता भीतास्ते तस्य तेजसा ।
अपि प्रेता पिशाचाश्च पलायन्तेऽतिदूरतः ॥ ४ ॥

धर्मः—वत्सौ ! मा भयं भजेथाम्
अहं सहाऽऽगमिष्यामि साहाय्यं दातुमद्य वाम् ॥
त्वरयैवाऽऽनयिष्यामो मृकण्डतनयं वयम् ॥ ५ ॥

उभौ—प्रभो ! यथायुष्मदाज्ञां कर्तुमवहितावेवावां तथापि किञ्चिद् विज्ञापयितुमीहावहे ।

धर्मः—विज्ञाप्यतां यद्विज्ञाप्यं श्रोतुमवहितोऽस्मि ।

कालः—भगवन् ! मन्त्रिणा चित्रगुप्तेन सह चिरं विचार्य तत्रागन्तव्यं देवेन।

मृत्युः—युक्तमुक्तं कालस्य ।

धर्मः—कथमिव ?

मृत्युः—सहसा कृतं कार्यं पश्चात्तापपापतापसमुद्रे निमज्जयति पुरुषमिति नाविदितं देवस्य ।

कालः—असङ्ख्यैराधिभिर्व्याधिभिश्च सह सहसा श्रीचन्द्रशेखरमन्दिरे मुनिबालकं पीडयितुं गतयोरावयोराधीनां व्याधीनां च या दुर्दशा जाता सा दशा देवस्य मा कदाचिद् भूदिति नः प्रार्थना।

धर्मः—[ परिक्रम्य ] सखे! चित्रगुप्त! किमेतौ ब्रूतः? कश्च तद्विषये भवदीयो विचारः?

चित्रगुप्तः—प्रभो! युक्तैवोक्तिस्तयोरुभयोरतो न देवेन तत्र सहसा गन्तव्यम्।

धर्मः—कथमिव?

चित्रगुप्तः—यं नाधयो व्याधय ईशभक्तं न मृत्युकालावपि देव! शक्ताः॥
हन्तुं तथा पीडयितुं मुनीन्द्रं न तत्र किञ्चित् सहसा विधेयम्॥६॥

धर्मः—सहसा तत्र प्रयाणाकरणे तन्मरणवेलाव्यतिक्रमो भवति।

चित्रगुप्तः—भवतु वेलाव्यतिक्रमः, किन्तेन?

धर्मः—सखे! किमेवमनभिज्ञ इव ब्रूषे? वेलाव्यतिक्रमे सति परमेश्वरकृतनियतिभङ्गः स्यात्, तञ्च महान्तमपराधं गणयति महेश्वरस्तादृशस्याऽपराधस्य पात्रमहमेव भवेयं यतोऽहं तस्मिन् कर्मणि तेनैव नियुक्तः।

चित्रगुप्तः—मरणवेलैव नास्ति, कुतस्तस्या व्यतिक्रमः?

धर्मः—कथं न मरणवेला?

व्यष्टवर्षप्रमाणायुः सर्वज्ञः सद्गुणार्णवः॥
तनयस्तनयो भावी सदाशिवपदाश्रयः॥

इतिवरप्रदानानुसारेण षोडशवर्षपरिसमाप्तिवेला त्वद्यैवाऽस्ति

चित्रगुप्तः—सत्यं तत्, तथापि शास्त्रोक्तेष्वायुष्करेषु लक्षणेषु कानि कानि लक्षणानि मार्कण्डेये सन्तीति विचार्य श्रवणाभ्या महोरात्रैः सूर्याचन्द्रमोभ्यामन्यैश्च प्राणिनां सदसदाचरणसाक्षि भिर्निवेदितानि श्रीमृकण्डमुनिपुत्रचरित्राणि चिरायुष्कराण्येव श्रुतानि श्रूयन्ते च ।

धर्मः—सखे ? कानि तानि ?

चित्रगुप्तः—देवः शृणोतु—

न मनसा वचनैरपि कर्मभिः कमपि पीडयतिस्म य आस्तिकः ॥
मुनिवरः स कथं कथय प्रभो ! भवति नेह चिरायुरयं स्वयम् ॥७॥

स्पृशति नैव कदापि पराङ्गना न च कदापि च पश्यति सस्पृहम् ॥
नमति मातृधियाऽपि च तास्तु यः स कथमल्पतरायुरहो भवेत् ॥८॥

कमपि निन्दति नैव कदाप्यसौ न परुषाणि वचांसि वदत्यपि ॥
जनित एव च योऽमृतभाषणः स कथमल्पतरायुरहो भवेत् ? ॥९॥

मातरं च पितरं च सद्गुरून् यो नमत्यनुदिनोदयं द्विजान् ॥
प्रेमभक्तिभरतो धृतव्रतो यात्यसौ न चिरजीवितां कथम् ॥१०॥

सदा सदाचारपथाधिरूढे सदा सदाशम्भुपदावलम्बे ॥
यदाऽल्पजीवित्वकथा कथं नो वृथा, वृथामानकथानभिज्ञे ॥११॥

उपहसति कदाचिन्नैव योऽङ्गैर्विहीनान्
सदयहृदयवृत्तिर्नैव रुणाद्धि दीनान् ॥
नयमयनयनो योऽमत्सरश्चानसूयः
स तु भवति चिरायुस्तत्र किं देव ! चित्रम् ? ॥ १२ ॥

आनन्दायुरभङ्गमङ्गलमहासम्पत्सुधावर्षिणं
श्रीमृत्युञ्जयमिन्दुशेखरमुमाकान्तं नितान्तं श्रितः ॥

सोऽयं बालक आशुतोषमखिलब्रह्माण्डरक्षामणिं
तन्मन्ये भविताऽल्पजीव्यपि महाकल्पायुषामग्रणीः ॥ १३ ॥

अतो देवेन तत्र न गन्तव्यमिति मे प्रार्थना ॥

धर्मः—[स्वगतम्] अहो कातरतरस्वान्तता मे किङ्कराणां महामन्त्रिणः प्रधानस्य च । [प्रकाशम्] समस्तसल्लक्षणसम्पन्ना अपि परमास्तिकशिरोमणयोऽपि शौर्यधैर्यनिधयोऽप्योदार्यवन्तोऽपि शतशः सहस्रशश्च मानवा देवा दानवा नियतिबलेन कालेन कवलीकृता अस्माभिर्दृष्टाः श्रुता अनुभूताश्च तथापि बालमेनं महायुषमल्पतपस्कं च गृहीतुं विचारपरम्पराः कुतश्चेति चित्रमेव मे प्रतिभाति, तन्मा कातरौ भवतम् ।

मयि सहागत आशु महेशितुर्नियतिपालनतत्परमानसे ॥
न हि भयं भविता भवतोस्ततस्त्वरितमेतमुभौ हि ममाऽनुगौ ॥१४॥

अलं चित्रगुप्तेन सह विचारकरणेन, दैवैरपि दुर्लङ्घ्या नियतिरिति नाऽविदितं वाम् ।

उभौ—[स्वगतम्] दुर्वार्यं खलु दुराग्रहग्रस्तस्य प्रभोः स्वान्तम् क उपायः, का गतिर्विना प्रभुचित्तानुवर्त्तनं परमपरतन्त्राणां किङ्कराणाम् । [प्रकाशम्] भगवन्! यथाज्ञा देवस्य, इत इतो देवः [इति निष्क्रान्ताः सर्वे]

[ततः प्रविशति कावेरीतीरे शिवमन्दिरे श्रीचन्द्रशेखरं पूजयन् मुनिर्मार्कण्डेयः]

मार्कण्डेयः—अशरणशरण! श्रीशैलजाप्राणबन्धो!
प्रणतजनमनोऽभीष्टाधिकार्थप्रवर्षिन् ॥
शशधरवरमौले! बालमेनं त्वदीयं
जनिमृतितितिभीतं पाहि पाहि प्रपन्नम् ॥ १५ ॥

[इति पठन् श्रीचन्द्रशेखरं साष्टाङ्गपातं प्रणमति, निमीलित नेत्रः श्रीमहामृत्युञ्जयमन्त्रं जपति. ]

[ततः प्रविश्य विशालाक्षीमृकण्डौ श्रीचन्द्रशेखरं दण्डवत्प्रणम्य]

उभौ—नमः शिवाय शान्ताय कान्ताय मेनकाभुवः ॥
कृपापीयूषपूर्णाय श्रीमते चन्द्रमौलये॥ १६ ॥ [इत्युच्चैः पठतः]

मार्कण्डेयः—[ साश्चर्यमुत्थाय ] कुतोऽकस्मान्मातापित्रोरत्रागमनम् ? सुदिनमिदम् ।

वात्सल्यामृतसम्पूर्णस्वान्तौ शान्तौ शिवाविव ॥
नमामि मातापितरौ मार्कण्डेयो मुहुर्मुहुः ॥ १७ ॥

उभौ—वत्स ! श्रीमन्महामृत्युञ्जयदेवप्रसादतः ॥
आनन्दारोग्यदीर्घायुःश्रेयःश्रीसंयुतो भव ॥ १८ ॥

मार्कण्डेयः—अयि मातापितरौ ! किमर्थं व्यर्थमत्रभवद्भ्यां भवद्भ्यामत्रागमनश्रमः स्वीकृतः ?

उभौ—वत्स ! जानास्येव त्वं प्रायोऽकुशलशतशङ्काकुलानि सुहृदां चेतांसीति ।

मार्कण्डेयः—पितरौ ! श्रीचन्द्रशेखरचरणशरणानां कुतोऽकुशलशङ्कापि ?

मृकण्डः—वत्स ! सत्यमेतत् तथापि मातुस्ते दुःस्वप्नदर्शनेनाऽतीवा कुशलताशङ्का जाता यथैतावतीं भूमिमतिक्रम्याऽऽगतौ स्वः ।

मार्कण्डेयः—मातः ! पितः ! स्वप्नेऽपि च सत्यत्वबुद्धिः ?

उभौ—न स्वप्ने सत्यत्वबुद्धिः किन्तु स्वप्नफले सत्यत्वबुद्धिः खल्वस्माकम् ।

मार्कण्डेयः—आर्यौ! दुःस्वप्नजालानि दुःस्वप्नफलानि चाप्यनाश्रितश्रीचन्द्रचूडचरणानामेव सत्यानि भवन्तीति नाविदितं वः।

विशालाक्षी–वत्स! तवोक्तिः सर्वाप्यवितथैव तथाप्यस्मन्मन्दभाग्यात् सर्वमपि वितथं प्रतिभाति। शृणु, भगवता श्रीसाम्बसदाशिवेन त्वं कृपया समर्पितोऽपि–षोडशवर्षमात्रवयस्को भविष्यति परलोकप्रणयितामिति–वरप्रदानसमय एव देवर्षिणोक्तम्। महाराजेन संयमनीश्वरेण त्वां ताडयितुं मारयितुं च प्रेषिता आधयो व्याधयो ये मया स्वप्ने दृष्टास्त एवातोऽविदूरं नदीतीरं जाग्रदवस्थायां मया दृष्टाः। भगवान् यमोऽपि साधिभिर्व्याधिभिर्मुक्तं कालमृत्युभ्यां चागृहीतं गृहीतुमागमिष्यतीति शङ्का मे; ततः कुशलिनमारोग्यवन्तं च त्वां दृष्ट्वाऽपि न हृदयकम्पो विरमति, नौदास्यदास्यमपसरति, नापिचानन्ता श्चिन्ता उपरतिमुपगच्छन्ति. [इत्युक्त्वाऽश्रूणि मुञ्चति]

मार्कण्डेयः—[स्वगतम्] मातृचरणानामतिभूमिकामधिरूढो मदीयात्याहितशङ्काभारस्तच्छ्रीचन्द्रशेखरचरणाश्रयबलेन लघुः कर्तव्यो मया [प्रकाशम्] अयि मातर्मा कामपि शङ्कां कुरुष्व, शृणु—

देवं देवगणार्चितं त्रिनयनं चन्द्रार्द्धचूडामणिं
हस्तस्थामृतपूर्णरत्नकलशं नित्यं वराभीतिदम्॥
मातस्तात! न कातरौ हि भवतं तं विश्वरक्षामणिं
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमः? ॥१९॥

यश्च द्वादशवर्षमात्रपरमायुष्कं नरेन्द्रात्मजं
मृत्योः पाशत आश्वमोचयदयं देवो दयार्द्राशयः॥
मातस्तात! तमाशुतोषमखिलापद्वृन्दविध्वंसकं
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमः ॥२०॥

स्वीयप्राणपतेर्मृषा मृतिकथामाकर्ण्य सद्यो मृतां
प्रेमार्द्रां तु मदालसां करुणया सञ्जीवयामास यः ॥
मातस्तात ! तमन्तकान्तकमुमाकान्तं प्रशान्तं शिवम्
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद्यमः ॥ २१ ॥

दत्त्वा पुत्रशतानि तीव्रतपसे श्रीकृष्णचन्द्राय यः
प्रद्युम्नं च ररक्ष मत्स्यजठरान्तःस्थं महावारिधौ ॥
मातस्तं शशिशेखरं पुरहरं गङ्गाधरं शङ्करं
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमः ॥२२॥

यो मृत्योरपि मृत्युरात्मजनतादीर्घायुरारोग्यदः
सिञ्चन्नेवामृतधारयाऽऽत्मजनताः पुष्टिप्रदो यः सदा ॥
ॐ जुंसःप्रतिपाद्यमम्ब ! जगतामारोग्यदं सौख्यदं
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमः ॥२३॥

आधिव्याधिविपाब्धिशोषणकरो यः संस्मृतोऽपि क्षणाद्
यश्चालायुषमप्यनन्यशरणं श्वेतं ररक्षेश्वरः ॥
मातस्तं करुणाकटाक्षलहरीध्वस्ताखिलापच्चयं
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद्यमः ॥ २४ ॥

आधिव्याधिशताकुलान् मृतिभयप्रध्वस्तधैर्यान् निजान्
कारुण्यामृतसागरः प्रकुरुते यः सत्वरं निर्भयान् ॥
मातस्तात ! तमिन्दुमौलिमतुलारोग्यान्वितानन्ददं
श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमः ॥२५ ॥

त्र्यम्बकं सकलतुष्टिपुष्टिदं चन्द्रशेखरमुपाश्रितोस्म्यहम् ॥
मोचयिष्यति स मां मृतेर्भयान्मा भयं भजतमाकुलौ गुताम् ॥२६॥

यश्चिन्तितोऽपि करुणामृतवीक्षणेन
व्याधीन् विनाशयति तत्क्षण एव साधीन् ॥
तं कालकालमकलं कलयामि मातः !
किं वा करिष्यति ममोग्रतमो यमोऽपि ॥ २७ ॥

परमशिवमुमासहायमीशं
शरणमुपैमि महासहायमेकम् ॥
जननि ! जनक ! निर्भयो बिभेमि
प्रबलतमाश्च यमादपि प्रचण्डात् ॥ २८ ॥

मान्यौ मातापितरौ ! एष मे निश्चयस्तन्मा चिन्तां कुरुतम् ।

उभौ—वत्स ! सेयं ते परमेश्वरे परा श्रद्धैव श्रेयःपरम्पराः करिष्यति, किं नौ चिन्तया; तत्सभामण्डपमुपेत्य श्रीचन्द्रशेखरं चिन्तयिष्यावः।

मार्कण्डेयः—आर्यौ साधयतं युवामहमपि तस्यैव श्रीचन्द्रशेखरस्य पूजना नन्दनिमग्नो भवामि ।

उभौ—वत्स ! भक्तवत्सलो भगवान् भवो भवतु ते दीर्घायुरारोग्यवर्षी [ इत्युक्त्वा निष्क्रान्तौ ]

[ ततः प्रविशति महिषारूढो यमः ]

यमः—[ महिषादवरुह्य सभामण्डपमुपेत्य परितोवलोक्य च स्वगतम् ] अहो भगवतो भक्तवत्सलस्य श्रीमृत्युञ्जयमहेशस्य स्वभक्ते पक्षपातः, यदत्र पूर्वस्यां वज्रपाणिः शचीपतिरुत्तरस्यां कुबेरः पश्चिमायां च वरुणः श्रीमहेश्वरेण स्वभक्तरक्षणाय स्थापिता इति मे प्रतिभाति। अहो ईश्वराणां विस्मरणशीलता काप्याश्चर्यकरी यया स्वबद्धानपि

नियमान् स्वयं विस्मरन्ति । भवतु यासनेकसहस्रप्रवृत्तिपरतन्त्र तया प्रभवो विस्मरणशीलाः परममी महेन्द्रादयोपि तदधिकारिणः सर्वेपि विस्मरणशीला भवन्तीति नाल्पं विस्मयस्थानम् । अहो कोऽप्यद्भुत एव मुनिपुत्रस्यास्य तेजःपुञ्जप्रसरो यो न सह्यते केनापि, ततश्च निजमन्दिरप्रवेशो दुष्कर एव । [ निपुणं निर्वर्ण्य ] दक्षिणदिग्द्वारे न कश्चिद्देवस्तिष्ठति ततस्तद्द्वाराद्बहिः स्थित्वा बालमुनेरस्य जीवकलामाकर्षामि । वेलाऽतिक्रमो भवति ।

[ ततः प्रविशति विशालाक्षी मृकण्डश्च ]

उभौ—[ यमाभिमुखौ. ]

प्रणमावः प्रणम्री त्वां यम ! संयमनीपते ! ॥
निपतन्तु कृपादृष्टिवृष्टयोऽस्मासु ते सदा ॥ २९ ॥

[ इति वदन्तौ प्रणमतः ]

यमः—[ सरोषम् ] किमस्मत्कृपया युवयोः प्रयोजनम् ? भवतोः पुत्रेणाऽनेन समाराधितः श्रीमृत्युञ्जयः कृपां कृपाम्बुधिर्युष्मासु करिष्यति, पुत्रं च वां स एव मत्पाशबन्धान्मोचयिष्यति, योऽयं प्रमत्तो बालः- 'श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमः' इति प्रतिक्षणं प्रलपति ।

उभौ—[ स्वगतम् ] देव ! सत्यानि सन्तु देवस्य ते वचनानि [ प्रकाशम् ] भगवन् ! क्षन्तव्यं बालस्यास्य बालचापलं परमदयामयाशयेन भगवता, अल्पमेधोऽल्पवयाश्च स किं जानाति महिमानं ते ?

यमः—नहि नयेवं भविष्यति । अधुनैव तस्य वचनविपर्ययस्य फलं दर्शयिष्यामि ।

विशालाक्षी-भगवन्! यद्येवमेव देवस्य निश्चयस्तर्हि तस्मै बालाय दातुमिष्टं फलं तन्मात्रे मह्यं दातुं कृपां कुरुष्व [इति वदन्ती प्रणमति]

यमः—नैवं कदापि भविष्यति।

मृकण्डः—भगवन्! मा भवत्वेवम्—

दयामय! महामान्य! यम! संयमनीपते! ॥
पुत्रेणाऽनेन सह मावपि त्वं नय ते पुरीम् ॥ ३० ॥

इतीयं सप्रणामं प्रार्थना नौ।

यमः—[सरोषम्] अपसरतमपसरतं जरठौ! नाधुना युवयोर्वचनश्रवणावकाशोऽपि मे।

[इत्युक्त्वा महिषमीरयन् कालमृत्युभ्यां सह श्रीचन्द्रशेखरमन्दिरस्य दक्षिणद्वारं प्रति गन्तुं निष्क्रान्तः]

[श्रीचन्द्रशेखरमन्दिरं गन्धपुष्पाक्षतबिल्वपत्रैः शिवलिङ्गं सम्पूज्य मार्कण्डेयः प्रबद्धाञ्जलिः स्तौति]

मार्कण्डेयः—करुणावरुणालय! प्रभो! चरणं ते शरणं गतोऽस्म्यहम् ॥
प्रणतप्रिय! कालकाल! भो! जय मृत्युञ्जय पाहि पाहि माम् ॥३१॥
[दक्षिणद्वारे बहिः स्थितो यमः—]

यमः—[स्वगतम्] अधिकाराधिपतयो ह्यधिकारपदप्राप्तिमदान्धचक्षुषो न कृत्याकृत्ये पश्यन्तीति लोकोक्तिर्न मृषा। एनं मुनिबालं

नियतिनियमानुसारेण मारयितुं बहवः प्रयत्ना मया कृताः परं सर्वेपि निष्फला जातास्तथापि दुराग्रहग्राहग्रस्तेन मया न चित्रगुप्तवचनानि श्रुतानि, न कालवचनानि गणितानि, न मृत्युवचनान्यपि स्वीकृतानि। मन्ये मुनिबालममुं पराभावयतो ममैव पराभवो भविष्यति। परमया भक्त्या वशीकृतोऽनेन श्रीमहामृत्युञ्जय इति प्रतिभाति। अथवेदानीं कृतोऽनुतापो निष्फल एव। अधुना त्वारब्धस्यान्तगमनमेव श्रेयः। [प्रकाशम्] कालमृत्यू! सज्जौ भवतं, बालोऽयं क्षणाद् भयभीतः पतिष्यति। [इत्युक्त्वा बालकं प्रति सरोषम्]

रे रे वाचाट! वाचाल! मुनिबाल! क ते शिवः ॥
मृत्युञ्जयो महादेवः सेवसे यं प्रतिक्षणम् ॥ ३२ ॥

एष कालश्च मृत्युश्च यमोऽहं च समागताः ॥
त्वां नेतुं, दृश्यते नात्र तव रक्षाकरो हरः ॥ ३३ ॥

आसन्नमरणं भक्तमवितुं त्वां महाभयात् ॥
लिङ्गे सन्निहितोऽपीशः कथं निश्चेष्टतां गतः ॥ ३४ ॥

किञ्च—

'श्रीमृत्युञ्जयमाश्रितस्य मम किं कर्तुं क्षमः स्याद् यमोऽ'
गीत्येवं बहु जल्पतस्तव फलं दास्याम्यहं दुःसहम् ॥
रे रे पश्य मम स्वरूपमखिलब्रह्माण्डसंहारकं
शक्तः को यमकालमृत्युवशगं संरक्षितुं मानवम् ॥ ३५ ॥

[ एवमुक्त्वा भयङ्करं रूपं दर्शयति ]

मार्कण्डेयः—यम! यम! न बिभेमि ते करालाद्वपुष इतो वचनैर्दुरायुधैर्वा ॥
यदसि परमशङ्करं विचेष्टुं सपदि ततो भवितास्यचेष्टितस्त्वम् ।३६।

[इत्येवं यममनादृत्य महादेवाभिमुखः स्तोतुमुपक्रमते]

जनिमृत्युजरानिबन्धनं विविधव्याधिशताधिपीडितम् ॥
परमेश! सदा त्वदाश्रितं जय मृत्युञ्जय पाहि पाहि माम् ॥३७॥

सदयं हृदयं विधाय ते स्वसमाधिं सहसा विहाय च ॥
इतमत्र समेत्य तावकं जय मृत्युञ्जय पाहि पाहि माम् ॥३८॥

अतिदीनमनन्यसंश्रयं गुणहीनं च विलीनमापदि ॥
प्रणतप्रतिपाल बालकं जय मृत्युञ्जय पाहि पाहि माम् ॥ ३९ ॥

शरणं तरुगेन्दुशेखर! त्वमिहैकोऽसि दयामयाशयः ॥
मम तत् त्वरयैत्य तावकं जय मृत्युञ्जय पाहि पाहि माम् ॥४०॥

नयनत्रितयेन भूषितं परिपिञ्चन्तमिहाऽमृतैर्निजान् ॥
श्रय ईश्वर! पुष्टिवर्द्धनं जय मृत्युञ्जय पाहि पाहि माम् ॥४१॥

न तपो नजपो न चार्चनं रचितं देव! दयानिधे! मया ॥
प्रणतप्रियतां विलोक्य ते जय मृत्युञ्जय पाहि पाहि माम् ॥४२॥

अशरणशरण! श्रीशैलराजात्मजाया ।
रमण! शरणमास्त्वां शरण्याग्रगण्यम् ॥
मरणतरणहेतोस्त्वन्महादेव! सद्यो ।
जय जय जय मृत्युं पाहि मां च त्वदीयम् ॥ ४३ ॥

त्वमपि किमु बिभेषि त्र्यम्बकास्मात् कृतान्ताद्
यदिह सपदि नायास्येव संरक्षितुं माम् ॥
अथमतिभयदः कोऽप्येति मा हन्तुमुग्रः
शिव शिव शिव पाहि त्वं पतिर्मे गतिर्मे ॥ ४४ ॥

[इति वदन् मूर्छया शिवलिङ्गमालिङ्ग्य पतति तावत् तत
एव लिङ्गादाविर्भूय श्रीमहामृत्युञ्जयः— ]

श्रीमृत्युञ्जयः—मा भैर्वत्स! समागतोऽस्म्यहमयं त्वां रक्षितुं सर्वतो
नो कालान्न च मृत्युतो न च यमाद् भेतव्यमद्य त्वया ॥
पतन्मेऽभयदं हि हस्तकमलं त्वन्मस्तके धारितं
हे निष्पाप! न पापयाऽपि च दृशा द्रष्टुं यमस्त्वां क्षमः ॥४५॥

[इति वदन् बालमस्तकन्यस्तहस्तस्तं समाश्वासयति ]

यमः—काल! काल! करालेन करवालेन मूर्च्छितम् ॥
मुनिपुत्रममुं जह्या मा विलम्बोऽवलम्ब्यताम् ॥ ४६ ॥

कालः—यथाज्ञा महाराजस्य [ इत्युक्त्वा हन्तुं धावति ]

यमः—मृत्यो! मृत्यो! धाव धाव प्रयत्नपरमो भव ॥
गृहाणेमं मुनिसुतं भयान्निपतितं द्रुतम् ॥ ४७ ॥

मृत्युः—यथाज्ञा महाराजस्य, [ इत्युक्त्वा धावति ]

श्रीमृत्युञ्जयः—[ त्रिशूलमुद्यम्य ]

काल! काल! करवालमुत्सृज स्वीयमिच्छसि यदि स्थिरं यशः॥
कालकालमयमाश्रितोऽस्ति मामित्यवध्य इह केनचिन्मुनिः ।४८।

कालः—[साञ्जलिबन्धम्] परमेश्वर! गृहीतमनुशासनं ते, एष निक्षिप्तः करवालः कोशे [इति वदन् प्रणमति]

श्रीमृत्युञ्जयः-श्रीमृकण्डतनयो नयोदधिर्मामुपाश्रित इहान्तकान्तकम् ॥
अस्त्यवध्य इति धाव धाव मा तन् मृते! विरम ते वृथा श्रमः।४९।

मृत्युः—[साञ्जलिबन्धम्] भगवन्! यथाज्ञा देवदेवस्य, एष विरतोऽस्मि तद्ग्रहणप्रयत्नात् [इति वदन् प्रणमति]

यमः—[स्वगतम्] कालमृत्यू कातरतरस्वान्तौ न किञ्चित् कर्तुं क्षमौ। भवतु अहं खलु भगवन्मन्दिराद् बहिः स्थित एव पाशाभिक्षिप्याकर्षामि तज्जीवनम्। प्रयाति तस्य प्राणप्रयाणसमयः [इति पाशान् क्षेप्तुमिच्छति तावत् शिवलिङ्गादाविर्भूतं श्रीमृत्युञ्जयं विलोक्य बद्धाञ्जलिः]

जय जय जय मृत्युञ्जय! नमामि तव पादयोर्युगलम् ॥
समयप्रयाणभीरुः कृतकार्यस्त्वां समर्चयिष्यामि ॥ ५० ॥

[इत्युक्त्वा पाशान् सज्जान् करोति]
[सभामण्डपस्थितौ विशालाक्षीमृकण्डौ]

उभौ—श्रीमृत्युञ्जय! देवदेव! भगवँस्त्वामेकवारं स्मरन्
जन्तुर्मन्तुशतान्वितोपि सहसा मृत्योर्भयान्मुच्यते ॥
एष त्वां प्रतिवासरं प्रतिनिमेषं च स्मरन् सर्वदा
नाथ! त्वन्निकटे कथं यममहाराजेन हा बध्यते ॥ ५१ ॥

[इति वदन्तौ मूर्च्छया पततः]

श्रीमृत्युञ्जयः—यम नियमशतैस्तपश्चरन्तं मुनितनयं नय मा यमालयं स्वम्॥
विरम विरम माऽञ्ज मुञ्च पाशान् शरणमुपागत एव मां शरण्यम्॥५२॥

यमः—सर्वेऽपि मृत्युसमये करुणाम्बुधिं त्वा—
मेष्यन्ति नाथ शरणं शरणप्रदाग्र्यम् ॥
आर्त्तार्तिहारिणमनन्यसमक्षमस्त्वं
काँस्कान् कृपानिलय मोचयितासि मृत्योः ॥ ५३ ॥

श्रीमृत्युञ्जयः—धर्मराज! तव धर्मराजतां साधिकां कुरु सुधर्मधारिणम्॥
एनमुत्तममुनेः कुमारकं संविधाय मृतिभीतिवर्जितम् ॥५४॥
इति मेऽनुशासनम् ।

यमः—[सप्रणामम्] नियतिः कर्म च कालो मृत्यौ वा जीवने हेतुः॥
व्यर्थास्त्रयोऽपि चेत् त्वय्येवं सर्वदा दयाधीने ॥ ५५ ॥

नियतिः प्रबला शरीरिणां परिहार्यं न हि कर्म केनचित् ॥
प्रबला भवितव्यता सतामिति वाचो वितथास्तथा सति ॥५६॥

यमोऽहं न कदापि त्वन्नियमोल्लङ्घने क्षमः ॥
प्रभुणाऽपि त्वया पाल्या नियमा निजनिर्मिताः ॥ ५७ ॥

किञ्च—

त्वं निष्कारणकारुण्यतारुण्यविवशाशयः ॥
क्षमस्व, नैव मुञ्चामि मुनिमेनमनायुषम् ॥ ५८ ॥

श्रीमृत्युञ्जयः—यम! विचारय केन सहाधमं वचनयुद्धमिदं कुरुषे त्वया ॥
अधिकृता अथवाऽतिमदोद्धताः क नु भवन्ति विचारधरा नराः॥५९॥

अधिकारमदान्धचक्षुषो न हि पश्यन्त्यधिकारदं प्रभुम् ॥
अपि तल्लघुदासनाशनै—स्त्वनेया प्रभुणा तदन्धता ॥ ६० ॥

प्रभुणा कथमप्युपेक्षिता अनयान्धा अधमाधिकारिणः ॥
प्रभुकीर्त्तिकलङ्ककारिणः प्रभवन्त्युत्पथचारिणो हि ते ॥६१॥

तुष्टे मयि प्रणतपालनबद्धदीक्षे
कालश्च कर्म नियतिश्च वृथैव सर्वम् ॥
इत्थं विचिन्त्य यम ! मुञ्च मुनेः कुमार—
मेनं मदेकशरणं मरणातिभीतम् ॥ ६२ ॥

यमः—नाहं कालो न वा मृत्युर्यमोऽस्मि देवदेव ! भोः ! ॥
नियत्येकप्रमाणोऽहं करिष्ये निर्मितं तया ॥ ६३ ॥

[ एवं वदन् मार्कण्डेयगले पाशान् क्षिपति ]

श्रीमृत्युञ्जयः-अधम ! यम ! मम त्वं किङ्करोऽपि प्रभुं माऽ
वगणयसि मदान्धः स्वाधिकाराभिमानात् ॥
फलमनुभव तस्यायैव येन प्रमादे
पुनरिह तु कदाचिद्वत्स ! कर्त्तासि नैवम् ॥ ६४ ॥

[ इत्युक्त्वा वक्षसि पादेन प्रहरति ] [ यमो मूर्च्छया महिपादधः
पतति ]

नेपथ्ये —

अलमलं जगदीश ! दयानिधे ! रचितयाऽतिरुषा निजकिङ्करे॥
न गणयन्ति महाशयमौलयोऽवगणनामपि बालविनिर्मिताम् ।६५।

[ इतिवदन्तः इन्द्रवरुणकुबेरा आकाशादवतीर्य श्रीमहामृत्युञ्जय-
पादयोः पुष्पाञ्जलिसमर्पणपूर्वकं क्रमेण प्रार्थयन्ते । ]

इन्द्रः—स्मरहर ! स्मर दीनदयालुतां स्वजनवत्सलतामपि तावकीम्॥
प्रणतपालकतां च विचिन्त्य तं यममसुं शिव पश्य दयादृशा ॥६६॥

वरुणः—करुणावरुणालय प्रभो ! करुणार्हे करुणादृशं यमे ॥
कुरु देव ! सदाऽसमक्षमोऽस्यपराधं प्रथमं क्षमस्व च ॥६७॥

कुबेरः—दीनानाथप्रणतजनतागाधसन्तापहारिन् !
श्रीमन्मृत्युञ्जय ! जय जय श्रीशिवास्वान्तकान्त ! ॥
मन्तुं क्षन्तुं त्वमसि भगवन्नर्ह ईशाशुतोषो
नित्यं श्रीमच्चरणकमलद्वन्द्ववृद्धेर्यमस्य ॥ ६८ ॥

श्रीमृत्युञ्जयः—अयि महेन्द्रमुखा अमरा अयं न यममन्तुरनन्त उपेक्षितुम् ॥
क्षम इहास्त्यधिकारमदान्धधीः स खलु पश्यति मामपि
न प्रभुम् ॥ ६९ ॥

निवारितोपि प्रणयेन योऽनयो मया स्यादित्य दयामयात्मना ॥
हठेन पाशान्मुनिबालकेऽक्षिपन्निजाधिकारान्धतमोऽधमो यमः

इन्द्रः—देव ! सोयं तस्य परमः प्रमादस्तथापि परमेश्वरेण क्षन्तव्यमिति
मेऽभ्यर्थना ।

वरुणः—देवदेव ! दयासिन्धो ! दीनबन्धो ! जगद्गुरो ! ॥
भक्तवत्सल ! तं भक्तोत्तमं कुरु दयां यमे ॥ ७१ ॥

कुबेरः—कृपासिन्धो ! सूक्ष्मया दृशा विलोक्यमाने नापराधलेशोऽप्यस्ति
यमस्यात्रेति मन्येऽहम् ।

श्रीमृत्युञ्जयः—कथमिव ?

कुबेरः—स्मरहर ! स्मर किन्त्वमरर्षये कथितवानसि देव ! दयानिधे ! ॥
मुनिवराय वरार्पणतत्पराशय उमारमण ! प्रणतप्रिय ! ॥७२॥

श्रीमृत्युञ्जयः—ननु भवानेव वदतु किं मयोक्तम् ?

कुबेरः—[साञ्जलिबन्धम्] यथाज्ञा परमेश्वरस्य—
'मुने ! मूर्खोऽतिदीर्घायु—र्विद्वान् याऽल्पायुरात्मजः ॥
पुत्रो देयो विचार्याद्य इत्याज्ञा प्रभुणा कृता ॥'
इति स्मृतिमिति मे ॥

श्रीमृत्युञ्जयः-एवमेवाज्ञप्तं तेन किम्?

कुबेरः—ततः श्रीनारदेन—

'द्व्यष्टवर्षप्रमाणायुः सर्वज्ञः सद्गुणार्णवः ॥
सनयस्तनयो भावी सदाशिवपदाश्रयः ।' इति वरप्रदानं कृतम्॥

श्रीमृत्युञ्जयः-सम्यक् कृतं, ततः किम्?

कुबेरः—श्रीमतां प्रसादेन श्रीनारदमुनेर्वचनेन विशालाक्षीमृकण्डयोरयं मार्कण्डेयो नाम पुत्रो जातस्तस्य चाद्य पूर्णानि षोडश वर्षाणीति यमेन युष्मदाज्ञानुसारेण स्वनगरीं नेय एव। ततो यथायुष्मदाज्ञं कृतवतो यमस्य को वाऽपराध इति न मे बुद्धिर्बोधपदवीमवतरति ।

इन्द्रवरुणौ—भगवन्! कुबेरोक्तिर्युक्तैव ।

श्रीमृत्युञ्जयः-वत्स कुबेर! महेन्द्रवरुणौ! च, सत्यम् । यदि मार्कण्डेयोऽयमनाश्रितमच्चरणोऽप्रजतमहामृत्युञ्जयमन्त्रश्चाऽभविष्यत्तर्हि नापराधो यमस्याऽभविष्यत् परमयं बाल्यादेव मामुपाश्रितो वर्षचतुष्टयाच्च श्रीमहामृत्युञ्जयमन्त्रजपपरायणश्च नकञ्चिदपि न मां विस्मरतीति नाज्ञातं वः ।

स्वल्पायुरपि कल्पायुर्मृत्युञ्जयजपाद् भवेत् ॥
श्रीमृत्युञ्जयदेवस्य प्रसादात् परमेशितुः ॥ ७३ ॥

इति नाश्रुतपूर्वमविदितिपूर्वं वा लोकसाक्षिणो ज्येष्ठपुत्रस्य, तथापि तत्सर्वमविचार्यैव ममापि निदेशं न प्रगणय्य बलाद् बालस्याऽस्य गले पाशान् प्राक्षिपदिति परमोऽपराधो यमस्य।

कुबेरः—न सर्वः सर्वज्ञो भवति भुवि, सर्वज्ञमपि वा
न कं कं ते माया नयति भगवन्नुन्नतमताम्? ॥
विचार्य त्वन्मायाविलसितमिदं सर्वमधुना
दयासिन्धो! शम्भो! कुरु कुरु दयां शङ्कर! यमे ॥ ७४ ॥

इन्द्रवरुणौ-पशवः सकला वयं हि ते, पतिरेकस्त्वमसीह नः प्रभो! ॥
पशुपाल! कृपालयः स्वयं पशुतां न प्रगणय्य पाहि नः ॥७५॥

श्रीमृत्युञ्जयः-[स्वगतम्] दिक्पालानां यमे मदनुग्रहाय प्रार्थनातिशयः। इदानीं कर्त्तव्य एवाऽनुग्रहः। [प्रकाशम्] देवाः! का तर्हि युष्माकमर्थना?

देवाः—मृत्युञ्जय! महादेव! पीयूषार्द्रतरं करम्॥
निधेहि यममूर्ध्नि त्व प्राप्तसञ्ज्ञं विधेहि तम्॥ ७६॥
[इतीयं प्रार्थना]

श्रीमृत्युञ्जयः-महेन्द्र-धनद-प्रचेतस! इमां तु वः प्रार्थनां
करोमि सफलां यतः किमपि सौहृदं निस्तुलम्॥
मिथो लसति वस्ततो यममयं प्रभुञ्चाम्यहम्
परस्परहितैषिता प्रमुमुदेऽधिकार्याश्रिता॥ ७७॥
तथापि प्रथमं मया बालायाऽस्मै मार्कण्डेयाय वरो देयस्तदनन्तरं यमेऽप्यनुग्रहो विधेय इति मे युक्तं प्रतिभाति।

देवाः—[सानन्दम्] एवमेव देवदेव! प्रथमं बालायास्मै वरं वितीर्य ततो यमेऽप्यनुग्रहः करणीय इत्येव नः प्रार्थना।

श्रीमृत्युञ्जयः-अभयमभयमंघ वत्स! वत्स! त्वमुपगतोसि ततो विमुच्य चिन्ताः॥
वरय वरमहं वरप्रदस्ते मुनिवरपुत्र! न ते किमप्यदेयम्॥७८॥
[इति वदन् पीयूषार्द्रेण पाणिना मार्कण्डेयं शिरसि स्पृशति]

मार्कण्डेयः—[ससञ्ज उत्थाय परितोऽवलोक्य च एकतो यमं निःसञ्ज्ञं पतितं दृष्ट्वा, सभामण्डपे च स्वकीयौ मातापितरौ मूर्छितौ विलोक्य सखेदं स्वगतम्]—
अहो यमोऽपि भगवान् स्वयं संयमिनीपतिः॥
एनां दशामनुभव—त्यकृपावेक्षणात् प्रभोः॥ ७९॥
भवतु प्रथमं मया यमदेवविषय एव परमेश्वरस्य कृपादृष्टिः प्रार्थनीया॥ [प्रकाशम्]
यममुं शिव! संयमिनीश्वरं
शिवदयाऽऽशु विलोकय दयादृशा॥
कुरु समञ्ज्ञमयं हि वरो वरो
मनसि मे प्रतिभाति न चापरः॥ ८०॥ इत्युक्त्वा प्रणमति।

लोकपालाः-धन्योसि वत्स! धन्योऽसि मार्कण्डेय! महामुने! ॥
उपकारपरो यस्त्व—मपकारपरेऽप्यरौ ॥ ८१ ॥

श्रीमृत्युञ्जयः-[ सानन्दं स्वगतम् ] शोभते मद्भक्तानामेवमेव नित्यमपकारपरेष्वप्युपकारपरायणान्तःकरणता। [ प्रकाशम् ] वत्स! 'मातृदेवो भव' 'पितृदेवो भव' इति निगमागमशासनानुसारेण प्रथमं विसङ्गौ तौ मातापितरावेव ससङ्गौ विधेयौ, तद्विस्मृत्यैव किमिति यमं ससङ्गं कर्तुं प्रार्थयसे? कस्ते महापराधपरम्पराकारिणा तेन सह सम्बन्धः?

मार्कण्डेयः—[ साञ्जलिबन्धम् ] भगवन्!
यदि तु यममयं भयङ्कराणां प्रथमतमं न विभो! भवेद्भवेऽस्मिन् ॥
क इह सुकृतमार्गमाश्रयेद्वा शिव! शिवदं, तदयं यमो गुरुर्नः॥८२॥
गुरुस्तु मातापित्रोरप्यपेक्षया गुरुतर इति नाविदितं केषामपि तेन च सम्बन्धेन तथा प्रार्थना मे।
[ इत्युक्त्वा साश्रुलोचनस्तूर्णीं तिष्ठति ]

लोकपालाः—बाल! बालोऽप्यबालस्त्वं भाले बालेन्दुधारिणः ॥
कृपया देवदेवस्य श्रीमन्मृत्युञ्जयप्रभोः ॥ ८३ ॥

श्रीमृत्युञ्जयः-[ स्वगतम् ] बालेनाऽप्यधुना निरुत्तराः कृता वयम् [ प्रकाशम् ]
वत्स! वत्स! यमस्यार्थे प्रार्थितां लोकपालकैः ॥
दयादृशं करिष्यामि त्वं वृणुष्व तवेप्सितम् ॥ ८४ ॥

मार्कण्डेयः—किमन्यद् वरणीयम्?
यदि देयो वरो मह्यं वरार्हो यदि वाऽस्म्यहम् ॥
सञ्जीवय दयासिन्धो! यमं संयमिनीपतिम् ॥ ८५ ॥
यत्प्रसादान्मया लब्धं भवतो दर्शनं प्रभो! ॥
अनेकजन्मसु कृतैः सुकृतैरपि दुर्लभम् ॥ ८६ ॥
ततश्च मातापितरौ दयामृतमयाशयौ ॥
सञ्जीवय मम प्रेम्णा द्वितीयोऽयं वरो मम ॥ ८७ ॥

श्रीमृत्युञ्जयः-यद्येवं तवेच्छा तर्हि सञ्जीवयामि प्रथमं यमदेवमेव [ इत्युक्त्वा कमलदलकोमलं पीयूषरसार्द्रं च स्वहस्तकमलं यमस्य मस्तके निदधाति ]

यमः—[सद्यः संज्ञामुपलभ्योत्थाय श्रीमृत्युञ्जयमहेशचरणयोः साष्टाङ्गं दण्डवत्प्रणम्य ]

जय जय जय दीनानाथबन्धो ! दयाब्धे !
जय जय जय भक्ताभीप्सितार्थप्रवर्षिन् ॥
जय जय जय गौरीप्राणबन्धो ! परात्मन् !
त्वमिव भुवि महेश त्वं जयस्याशुतोषः ॥ ८८ ॥
जय जय जय शम्भो ! क्षन्तुमेकं तु मन्तुं
निखिलभुवनविख्यातक्षमस्त्वं क्षमोऽसि ॥
नहि नहि नहि मृत्युं प्रेषयिष्यामि मृत्यु-
ञ्जयमनुजपवन्तं प्रत्यहं ते विनाऽऽज्ञाम् ॥ ८९ ॥
[इत्युक्त्वा पुनर्दण्डवत् प्रणमति ]

श्रीमृत्युञ्जयः-[पुनस्तन्मस्तके हस्तं निधाय ]

उत्तिष्ठोत्तिष्ठ भद्रं ते यम ! संयमिनीपते ॥
गच्छ गच्छ यथापूर्वं स्वाधिकारपरो भव ॥ ९० ॥
नास्ति मे त्वयि रोषोऽद्य प्रणतिप्रशमः स मे ॥
नातः परं मदीयेषु भक्तेष्वागस्करो भव ॥ ९१ ॥

यमः—शिरसा गृहीतमनुशासनम् [इति वदन् प्रणमति]

इन्द्रवरुणकुबेराः-भगवन् ! कृताः कृतार्था वयं श्रीपरमेश्वरेण मुना संयमिनीपतौ रचितेनानुग्रहेण इति प्रणमन्ति

श्रीमृत्युञ्जयः—मया समर्पिताधिकाराः सर्वेष्वधिकारिणो मे पुत्रनिर्विशेषा एव तेषु कृतो निग्रहोऽप्यनुग्रह एव ।

सर्वेऽपि—एवमेव भगवन्नेवमेव ।

श्रीमृत्युञ्जयः—मार्तण्डेयमर्यं त्वया मार्कण्डेय ! दयालयान् ॥
पुरन्दरमुखान् देवान् प्रणम प्रणयान्वितः ॥ ९२ ॥

मार्कण्डेयः—यथाज्ञा परमेश्वरस्य [इति सर्वान् प्रणमति]

देवाः—श्रीमृत्युञ्जयदेवस्य प्रसादेन निरन्तरम् ॥
आधिव्याधिविनिर्मुक्तश्चिरं जीव विरिञ्चिवत् ॥ ९३ ॥

श्रीमृत्युञ्जयः-उत्तिष्ठोत्तिष्ठ भद्रं ते मृकण्ड ! मुनिसत्तम ! ॥
वत्से ! वत्से ! विशालाक्षि ! पश्य पश्यात्मजं निजम् ॥ ९४ ॥

